॥ विजयतां श्रीगोकुलेशः प्रभुः ॥

# । अथ श्रीदण्डाकारदिवाकरः ।

॥  ॥

श्रीगोपीजनवल्लभाय श्रीगोकुलेश्वराय नमः ।

स्वसेव्यानां गुरूणांश्च येऽनन्याः सर्वदा स्थिताः।
ऊर्ध्वरेखाद्वयोद्भासल्ललाटाँस्तान्वयं नुमः ॥१॥

श्रीकृष्णमथकृष्णास्यं विठ्ठलेशश्च देशिकम् ।
श्रीमन्तं गोकुलेशं सद्दण्डाकारधरं स्तुमः ॥२॥

श्रीवैकुण्ठजयाम्बाख्यपितृपादाम्बुजद्वयम् ।
प्रणम्यारभ्यते सोऽयं दण्डाकारदिवाकरः ॥३॥

ननु किमिदमूर्ध्वपुण्ड्रविधाने 'दण्डाकारं ललाटेस्या'दित्यपूर्वमुच्यतेऽथ च तद्दण्डाकारमपि द्विरेखात्मकं विच्छिन्नमेव विधेयमिति । सर्वेऽपि जगद्गुरुश्रीविश्नुवदनप्रवर्तितशुद्धाद्वैतमतावलम्बिनउपलक्षणन्यायेन तच्चरणाकारं कुर्वते किल। 'तिलकंलिङ्गमेव चे'त्यस्य प्रकाशे यद्यपि तदुल्लेखितं, तथापि सन्त्येव तत्स्वरूपप्रतिपादकाः सद्ग्रन्थाः सम्प्रदाये, येषु विविच्य तत्तरतमभावो निर्णीतस्तैस्तैर्महानुभावैः । स एव महाजनन्यायेन

स्वीकार्यः स्वाचार्योक्तिवशंवदैस्तन्मार्गीयैः। एकस्मिन्नर्थे वैमत्यस्यान्याय्यत्वाच्च।

सत्यम्। किन्तु पृथक्शरणमार्गोपदेष्टॄणां तिलकादिबहिरङ्गलिङ्गमपि वैलक्षण्यानुभावकपृथग्रूपप्रकाशकत्वेन कस्यचिदभूतपूर्व्वस्य महिमानमुद्बोधयति। मार्गान्तराद्विशेषप्रकारकत्वात्। द्विरेखता तु दण्डाकारस्याकारपरिचायिका सती मूलतोऽङ्घ्रियुग्मस्यविभिन्नत्वमात्रपर्य्यवसायिनीति। दण्डेनोपमीयतेऽङ्घ्रिरभिरूपैः 'ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्ड' इति कविप्रयोगात्। चरणाकारकरणतया दण्डाकारकरणतया वा न केचिदन्यदीया भवन्ति, शरणमार्गैकलक्ष्यत्वादपां पारावारप्रवेशमात्रसाध्यत्ववत्। वैभवोऽयं त्रिभुवदनवैश्वानरस्य वह्निन्यायसंवलितो यद्दाहकत्वेपाचकत्वं, तस्मिन्नेतस्मिँश्चपुनः प्रकाशकत्वमिति। प्रथमत एवायं दण्डाकार समुदाचारो द्विरेखाकारतामापादितोमहद्भिस्तथैवाचर्य्यते। 'अन्यसंबन्धगन्धोऽपि कन्धरामेव बाधत' इति श्रीप्रभुचरणोक्तिपरवशानां न प्रवृत्तिराचार्य्यचरणानभिहितस्याचरणे चरणाकारस्योपलक्षणोपलक्षितस्य करणे वा। 'दण्डाकारं ललाटेस्यादि 'त्येव श्रीमहाप्रभूणामुदितिः। 'भ्रूमध्यात्केशपर्य्यन्तं समानरेखाद्वयात्मकं तिलकं विधाये'ति प्रभूणामन्यत्रोदाहृतिः। श्रीगोकुलनाथानां तथैव द्विरेखकरणात्मिकाव्यवहृतिः। अतस्तथैव व्यवहर्तव्यम्। तदेवाचरणीयम्। स एष राजमार्गः। ये चरणाकारं विदधते येवा दण्डाकारं–द्विरेखञ्च ते तथैव

ज्ञात्वा विदधतामेकस्मिन्नर्थे वैमत्यस्यासंभवात्। नहि मत्यक्षो घटः प्रमाणसहस्रैरपि पटो भवितुमर्हतीति।

स्यादेतत्। तथापि द्विरेखकरणेऽधःप्रोञ्छनाच्छिन्नमूलता प्रतिभासते। सा च 'वर्तुलं तिर्य्यगच्छिद्रमि'त्यादिपद्मपुराणोदितनिषेधवचसाऽष्टादशप्रकारका ये निषेधास्तेषामन्तर्वर्तितया दोषमुद्भावयन्ती कलानिधौ कलङ्कवत्प्रेक्षावतां परामप्रीतिमुत्पादयति। किञ्च 'मूले सिंहासनं कुर्य्यादि'ति पुराणान्तरीयविधेरपि वैयर्थ्यं प्रतिभाति। अतस्तादृशकरणस्य निन्दितत्त्वात्तदपहायाधस्तिर्य्यग्रेखाऽर्द्धचन्द्राकाररेखा वा विधेया येन सामर्थ्यादेकार्थवत्वे सति नानर्थक्यं प्रसज्येत। तिर्य्यगादिरेखाकरणेन विधिश्च विहितः सन्द्विरेखदण्डाकारत्वं न भज्येत। दोषश्च दूरीभवञ्जनो न विरज्येत। तस्मात्तमेव वाक्यार्थं मत्वोचितत्वाद्बद्धमूलं दण्डाकारं विधातव्यमितिचेत्।

मैवम्। त्रिधा तस्या निवृत्तिः। तत्रैके 'श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा। श्रीकरं पीतमित्याहुः श्वेतं मोक्षकरं शुभमि (प. पु, उ. २५३,४०) तिवचनानन्तरं तद्विधानां निन्दावाक्यानां गणनात्वात्पद्मपुराण एवास्या अपिगोपीचन्दनादिकार्य्यतादृक्सकामश्वेतादिविषयकत्वात्। तदनन्तरं पठितत्वाच्च। अवश्यकार्य्यदण्डाकारे यदीमानि निषेधयेयुश्चेत्तत्प्रतिपादनानन्तरमेवैतानि वचनानि भवेयुः। अथ च तत्रैव 'ऊर्ध्वपुण्ड्रमृजुं सौम्यं सुपार्श्वं सुमनोहरम्। दण्डाकारं तु शोभाढ्यं मध्ये छिद्रं प्रकल्पयेदि'ति (प. पु. उ.२५३–२३)

श्लोकोक्तमध्येछिद्रस्य प्रकृष्टकल्पनाभावनाया वैयर्थ्यं स्याद-ग्रेऽच्छिद्रादीनां दूषितत्वात्। पुराणान्तरेष्वपि दण्डाकारनिरूपणानन्तरं तेषामनभिहितत्वाच्च। 'तस्माच्छिद्रान्वितं पुण्ड्रं दण्डाकारं सुशोभन'मित्यत्रापि छिद्रान्वितत्ववचनमच्छिद्रस्य व्यतिरेकार्थवत्वमेवापादयति। यदि नाम समेषां निषेधानां दण्डाकारेऽपि प्रवृत्तिः स्याच्चेदेकस्य रूपान्तरितस्य व्यतिरेक-लभ्यस्य विधेरभिधानं न भवेत्। 'अधर्मो दुःखसाधन' मित्युक्ते धर्मस्य सुखसाधनत्ववद्वैपरीत्येन सच्छिद्रस्याभ्युपगमत्वाच्च। अतो ज्ञायते 'मध्ये छिद्रं प्रकल्पयेदि'ति विधौ सुपेटिकास्थापन-न्यायेन सुरक्षितस्य द्विरेखदण्डाकारस्य नान्यानि दोषवाक्यानि प्रतिबन्धकानि भवन्ति। अप्राप्तत्वात्।

अन्ये पुनर्मूलमेवमूलम्। छिन्नं मूलं यस्य तच्छिन्नमूलम्। अत्रच्छिन्नपदं तात्पर्य्यग्राहकम्। मूलपदे मूलमात्रसंबन्धिनि तिलके लक्षणा। तादृक्–छिन्नत्वावच्छिन्नमूलमात्रत्वसंबन्ध-स्तिलके लक्ष्यते। ततो यत्र मूलमेव च्छिन्नं तन्नविधेयमर्था-न्मूलमात्रं न च्छेदनीयम्। तिलकं तु च्छिन्नं कार्य्यम्। अन्यथा श्रुतिप्रतिपादितद्विरेखत्वहानिर्द्वैधीकरणाभावाद्धात्वर्थश्चासंगतः स्यात्। 'मध्ये छिद्रं प्रकल्पये दित्यत्र 'छिदिर्द्वैधीकरणे' इति रुधादेश्छिदेः 'स्फायितश्वी'त्यनेन निष्पन्नो रगन्तच्छिद्र-शब्दः, छिद्यते तच्छिद्रम्। मध्यतो यदभिमतमन्तरं गृहीत्वा द्विधा क्रियते तन्मध्येछिद्रम्। दण्डाकारं कल्पयेन्मध्येछिद्र-ञ्च कल्पयेदिति कल्पनाद्वयस्य समुच्चयात्तिलकेऽन्वयः। पार-

म्परिकत्वात्। अथ चैतत्स्वीकारे कृतहान्यकृतकल्पनाप्रसंगत्वाच्छिन्नमूलतादोषो हीतरत्र लब्धावकाशः सन्द्विरेखस्य नैव विषयः। किञ्च छिन्नत्वावच्छिन्नमूलमात्रसम्बन्धि यत्तिलकं तस्य दूषितत्वान्मूलमात्रं यत्र विच्छिद्येत तत्र दोषो न त्वविच्छिन्नमूले छिन्ने तिलके। न हि चित्रे पुरुषे चित्रगुशब्दस्य प्रयोगो दृश्यते, न च लम्बः पुरुषो लम्बकर्णनाम्नाऽऽकार्य्यते। तादृक्समासघटितपदसमभिव्याहारोपस्थितिविषयकत्वाभावात्। अपि च 'स्थपतिनिषादः स्याच्छब्दसामर्थ्यादि'ति न्यायेन तथाविधेऽर्थे शीघ्रोपस्थितिजनकत्वानुकूलशक्तिरूपसामर्थ्यान्निषादाभिन्नः स्थपतिरेव निषादस्थपतिशब्दबोध्यः, न वा केवले निषादे स्थपतौ च शब्दसामर्थ्यावगतिः। अतो व्यपेक्षाविरहान्न द्विरेखे छिन्नमूलत्वं तादृक्कल्पनायाश्छिन्नमूलत्वात्।

अस्मादृशस्त्वत्रैवमातिष्ठन्ते यत् 'ज्ञात्वाऽज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति। विदुषः कर्म्मसिद्धिः स्यात्तथानाविदुषो भवेदि'ति श्रीकृष्णवचोऽमृतस्वारस्यरसास्वादकुशलैर्भगवदीयैर्न साधारणवद् गतानुगतिकत्वेन द्विरेखदण्डाकारकरणं समाद्रियते। किन्तु तन्माहात्म्यमवबुद्ध्यैव। दण्डाकारपदे दण्डवदाकारो यस्येति समासे दण्डेन तुल्यं दण्डवदिति 'तेन तुल्यं क्रियाचेद्वति'रिति शब्दशास्त्रानुशासितप्रतिपदोक्तरीत्यैकवचनव्युत्पन्नो दण्डपदस्य वतिर्भवति। तेन चैकदण्डवदवस्थितिर्यस्य तस्य चेन्मध्येछिद्रकरणाय च्छिन्दन्मूलमपिच्छिन्देत्त-

त्रायं छिन्नमूलाख्यो दोषः। इदमेव दण्डाकारं चरणाकारस्योपलक्षणत्वेन भारतमार्तण्डैः स्ववादग्रन्थे निर्दिष्टम् । न तु द्विरेखम्। तस्य तूर्ध्वपुण्ड्रधारणवादे केचित्त्वित्यादिना पृथक्प्रतिपादनात्। अत्र केचित्पदेन श्रीगोकुलेशानुयायिनः शुद्धाद्वैतसम्प्रदायस्यैकदेशीयत्वेन तैर्व्यवह्रीयमाणा लक्ष्यन्ते। पृथगवस्थितत्वात् । तथैव प्रतिपादितत्वाच्च । ततो विशेषनिर्णयानन्तरं तत्र भवद्भिरेव 'उपरि किञ्चिद्विस्तीर्णत्वे पदाकृतिर्ज्ञेयः समत्वे दण्डाकृति'रिति व्याख्यायि । तन्मूलं श्रीप्रभुचरणाना मुक्तिरेव। द्विरेखमपि दण्डाकारं तच्च 'दण्डयोराकारः दण्डाकारः स इवाकारो यस्य तत्'। गौरवं तूभयत्र सममेव। विनिगमना विरहोऽपि तादृगेव। अन्यथा विशेषणत्वासिद्धेः । 'सप्तम्युपमानपूर्व्वपदस्योत्तरपदलोपश्च'-त्यनेन वार्तिकेन दण्डाकारमिवेति बहुव्रीहेः पूर्व्वपदं तस्मिन्नुत्तरपदस्याकारशब्दस्य लोपो वाचनिकः। अत्र मूलत एव पृथक्क्रियमाणो दण्डयोराकारः 'आरभ्य नासिकामूलं ललाटं विलिखेन्मृदा। समारभ्य भ्रुवो र्मध्यमन्तरालं प्रकल्पयेदि'त्याभ्यां विधिभ्यां प्रतीयते । नासिकामूलञ्च यस्य यथाऽऽचारप्राप्तमभिप्रेतं तद्योगरूढयाऽभिज्ञाय ग्राह्यमित्याकरेषु। तत्मारभ्य ललाटमवधीकृत्य कुङ्कुमकरणक विलेखनेन द्वयोर्भ्रुवोर्मध्यं सम्यगारभ्यान्तरालप्रकल्पनेन च स्पष्टं द्विरेखदण्डाकारवत्त्वं सिद्ध्यति। एवञ्च यत्र दण्डशब्दवाच्ये द्वे रेखे आदितोऽन्तपर्य्यन्तं भिन्ने क्रियेतां तत्रैकस्या द्वयोर्वा किं कुत-

श्छिद्यते येनच्छिन्नमूलत्वमालक्ष्येत । अपि च छिद्यते स्म तच्छिन्नमितिच्छिदेर्निष्ठायां क्तः । निष्ठाशब्देन नियतं स्थानं निष्पत्तिर्वा गृह्यते । मूलमारभ्यान्तरालकरणान्नियतं स्थानं न मनागपि विक्रियते । छिन्नत्वनिष्पत्तिश्च स्वतः परतो वा । नाद्या । आमूलान्तं पृथगेवारभ्यमाणत्वात् । न च परतो रेखाद्वयस्य तथैवावस्थितिकत्वाच्च । अतो ज्ञायतेऽन्यो द्विरेखाच्छिन्नमूलस्य प्रचारप्रदेश इति संत्यक्तमात्सर्य्यैः सच्छास्त्रपारदृश्वभिः स्वयमेव विचारणीयम् ।

व्यवहारस्य सिद्धत्वान्नवेयंनैवकल्पना
सर्व्वः समीक्ष्य कार्य्येषु निर्दोषत्वं प्रवर्तते ॥४॥
दण्डयोराकृतिरिवाकृतिर्यस्यनिभाल्यते ।
तद्दण्डाकृति शोभाढ्यं द्विरेखं तिलकं स्मृतम् ॥५॥
छिन्नमूलपदेनैवं यन्न्यस्तं दूषणेक्षणम् ।
दण्डाकारे द्विरेखे तन्नस्थातुं मन्यते क्षणम् ॥६॥
पृथग्रेखाद्वयं दण्डाकारं यन्मूलतः कृतम् ।
तत्र तावत्कुतो भाति तदन्या छिन्नमूलता ॥७॥
मूलादारभ्य निखिलं विधेयं तिलकं द्विधा ।
नच्छेद्यं मूलमेवात्र प्राचीनैः परिकीर्तनात् ॥८॥
आचार्य्यपादैराज्ञप्तं प्रभुपादैः प्रकाशितम् ।
दण्डाकारं ललाटेस्यात्तद्विरेखं समं शुभम् ॥९॥

अथ च 'मूले सिंहासनं कुर्य्यात्पद्मं तस्योपरि न्यसेत्। श्रीगोपीजनपूर्व्वं तु वल्लभायेति मुद्रिकाम्। ऊर्ध्वपुण्ड्रस्य मध्ये तु धारयेद् गोपिकामृदा। चक्रादिकं ततो धार्य्यं ततः सेवां समाचरेत्'। इत्यनेनोर्ध्वपुण्ड्रस्य मूले सिंहासनविधिः सिंहासनस्योपरि पद्मविन्यासो मध्ये च गोपीजनवल्लभायेति मुद्राधारणं ततश्चक्रादिकमेतत्सर्व्वं गोपीचन्दनेनैव धार्यमित्यभिहितम्। आकरेष्वपि 'उर्ध्वपुण्ड्रार्थं गोपीचन्दनादितरद्रव्याणामुक्तत्वेन मुद्राधारणार्थं केवलं गोपीचन्दनादिमृदामेवोक्तत्वेन नित्यत्वाभिप्रेध ऊर्ध्वपुण्ड्रार्थं गोपीचन्दनमात्रधारणे पर्य्यवसन्न इति भाति'। अर्थादूर्ध्वपुण्ड्रं तु भगवदुपभुक्तकुंकुमेनैव विधातव्यम्। सिंहासनादीनि यावत्सर्व्वाणि गोपीचन्दनेन करणीयानीति निष्कर्षः। एकद्रव्येण सिंहासनकरणे द्विरेखत्वहानिः। एकस्या एव रेखाया रूपान्तरेण तथापरिणतत्वात्। द्विरेखनिष्ठभावानुपपत्तिस्त्वे तत्प्रतिपादकवचो विरोधश्च। किञ्चात्र सेवाविधेरेव प्रधानतया तदितरेषां गौणत्वेन कृताकृतत्वमाभाति प्रधानैकार्य्यसंप्रत्ययत्वात्। तिलकं तु न तथा लीनार्थगमकत्वेनान्यत्र प्रतिपादनात्। एवञ्च दण्डाकारस्योर्ध्वपुण्ड्रस्य बद्धमूलतापादनार्थं न केवलं 'मूले सिंहासनं कुर्य्यादित्येकेन वाक्यांशेन विनियोजनं न्याय्यम्। एकयोगनिर्दिष्टानामेकदेशग्रहणेनाङ्गिनोविकृतत्वाच्च। तावन्मात्रापेक्षितार्थस्य स्मरणीयत्वात्। अत एवादश्छलवचो न द्विरेखदण्डाकारस्वरूपस्यार्थविकल्पोपपत्त्या रूपान्तरं कर्तुं

प्रभवति । संघातार्थवैपरीत्यात् । अत एव 'प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेध' इतिन्यायेनाचारप्राप्तं यथाकारमेव द्विरेखदण्डाकारं श्रीप्रभुचरणानां समानरेखाद्वयात्मकमिति वचसान्वीयमानं सत्स्वरूपबोधने श्रुतिपुराणसम्मतां सुशोभतां दधद्धार्य्यं भासत इति सर्व्वं समीचीनम् ।

श्रीहरेरङ्घ्रिरजसा नासादिनिटिलान्तगः
चरितार्थो भवत्येव सिंहासनविधिः शुभः ॥१०

अत्र केचित्—यद्यपि श्रीमहाप्रभुचरणैः 'शङ्खचक्रादिकं धार्यं मृदा पूजाङ्गमेव तत्' इति निबन्ध आज्ञप्तं तथापि तस्य पूजाङ्गत्वेन कथितत्वात्तत्रच ब्राह्मणानामेवाधिकारात्तैरेव तयोर्भिन्नत्वनिगदनात् 'अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि माङ्गल्येषु च सर्व्वेषु न धार्य्य गोपीचन्दनमिति गोपीचन्दन धारणस्यानन्यानां नित्यसेवामाङ्गल्यविधौ निवर्तनाबोधकत्वाद्विरेखं भवतीति श्रुतिप्रमाणप्राबल्यात्सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेतिन्यायेन बाधितत्वाच्च तथैव शिष्टाचाराद्विरेखदण्डाकारधारणादन्यधारणस्य विवादग्रस्तत्वाच्च मन्दादरं समीक्षन्ते । तेन च सिंहासनधारणस्यापि सन्नियोगशिष्टत्वान्निवृत्तिरिति साग्रहं विवदन्ते ।

समं सुशोभनं भव्यमूर्ध्वरेखाद्वयं कृतम् ।
तद्दण्डाकारमित्येव शिष्टाचारोऽवबुध्यताम् ॥११॥

ये चापलपन्ति यत्तादृशस्योर्ध्वपुण्ड्रस्य नाकरेषु व्यवस्थानं विद्यतेऽपि च केनचिद्यवनेनादौ चित्रिते श्रीमदाचार्य्यचरणानां चित्रेऽपि तिलकस्य चरणाकारत्वं दरीदृश्यतेऽन्ये च केचन तथाविधा यथेच्छं स्वशेमुषीशय्यामधिशयानाः सच्छास्त्रज्ञाने निद्राणा एवानल्पविकल्पकल्पितामस्तुतगल्पानवलम्ब्यासम्बद्धं विद्वेषविषमं जल्पन्ति, तेऽपि वैष्णवाश्चेद्बन्धुसत्कृत्याऽस्माभिस्तथैवाभिवन्द्याः ।

वादे विवादे च विदोऽविदो विन्दन्ति वस्तुताम् ।
मार्तण्डस्य प्रकाशेऽपि भानं भिन्नं स्वभावतः॥१२॥
दण्डाकारं ललाटे स्यादित्याचार्य्यवचोऽमृतम् ।
विमुच्य म्लेच्छकार्य्ये नो वयं विश्वसिमोऽण्वपि॥१३॥
लक्ष्यलक्षणसंसिद्धां स्थितिं मेयस्य पश्यताम् ।
प्रमाणं भ्रान्तभणितिर्न भवेत्प्रतिभावताम् ॥१४॥

इति कृतं प्रसक्तानुप्रसक्तेन ।

इदमेव पुराणेषु हरिमन्दिराकारतया निर्दिश्यमानं निरीक्ष्यते । यथा च 'नासामूलं समारभ्य ललाटान्तं लिखेन्मृदा। मध्ये छिद्रं प्रकर्तव्यं तच्छिद्रं हरिमन्दिर'मिति स्कान्दे। अपि च भाले यशस्तिलकश्चदधानमूर्ध्वद्विरेखं हरिमन्दिरश्चत'दिति श्रीगोकुलनाथस्वरूपवर्णने प्राश्चः । मध्ये द्वैधीकरणस्य प्रकृष्ट कृतिविषयत्वाद्वस्तुशक्त्या विधेयार्थनिश्चये तन्निश्चयस्तत्प्रख्य-

न्यायेन, ऊर्ध्वपुण्ड्रप्रकरणान्तर्गतानामेतेषां विशेषाणां स्थितिरपि समानविधाना लक्ष्यते । साहि 'सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् । मध्ये छिद्रेण संयुक्तं तद्धिद्धिहरिमन्दिर मिति पाद्मवचसा समन्वेति । ऊर्ध्वपुण्ड्रे हि भावद्वयं चरणाकारस्य मन्दिराकारस्य च । हरिपदाकृतिमितिशब्दसामर्थ्यात्सिद्धे चरणाकारत्वे तस्यैव मन्दिराकारताविधानं वैलक्षण्यं द्योतयति । तदपि 'हरेः पदे तयोराकृतिरिवाकृतिर्यस्येति' स्पष्टं द्विरेखत्वमेवाचष्टे । ऊर्ध्वयो रेखयोर्मूले पूर्वोक्तप्रकारेण गोपीचन्दनमृदा सिंहासनात्मकतिर्य्यग्रेखाकरणकसंयुक्तत्वे तु वाक्यान्तरप्रयुक्ततद्विशेषस्थापकतया तदपि तामेव संस्थां लभते । प्रकरणविच्छेदाभावात् । आकरेषु केचित्पदेन त एव दर्शिता ये तथा न कुर्व्वते तेषामपि हरिमन्दिरत्वं तिलके 'तच्छिद्रं हरिमन्दिरमि'त्यनेन सिद्ध्यति । किञ्च 'ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे । सान्तराले समासीनो हरिस्तत्र श्रिया सहे' त्यत्र विशाले च सान्तराल इति विशेषणयोः क्रमेण विस्तृतार्थवृत्तेर्विशब्दाच्छालच्प्रत्ययेन विशालशब्दसिद्धे'र्विशालं पृथुलं मह'दिति कोषवाक्यादादेरन्तपर्य्यंतं यथाभीष्टं विस्तृतत्वं संलक्ष्यते । सान्तरालञ्च स्वाभिमतेनान्तरेण सहितत्वात्पृथक्त्वं प्रतिपादयद्द्विरेखे पर्य्यवस्यति । तथैवार्थप्रत्यायकत्वात् । सुमनोहरत्वञ्च 'ऊर्ध्वपुण्ड्रमृजुं सौम्यं सुपार्श्वं सुमनोहरम् । दण्डाकारं सुशोभाढ्यं मध्येछिद्रं प्रकल्पये'दित्यत्रावस्थितसुमनोहरशब्देनान्वीयमानं द्विरेख-

दण्डाकारं ज्ञापयति। तेन चोर्ध्वपुण्ड्रत्वावस्थितदण्डयोः सुमनोहरे सान्तराले विशाले च मध्ये श्रीहरेः स्थितेरुक्तत्वेन तस्याश्च मन्दिर एव युक्तत्वेन तत्प्रतीतेस्तदाकारत्वं तस्य निर्बाधम्। अथ च बद्धमूलस्यैव तिलकस्य हरिमन्दिराकारतां निगदद्भि र्निबन्धस्य टिप्पण्यां 'तस्माद्येन शरीरे तु ऊर्ध्वपुण्ड्रं धृतं भवेत्। तस्य देहो भगवतो विमलं हरिमन्दिरमिति पाद्म (२५३-३-उ.) वचसोर्ध्वपुण्ड्रधारिणो देहस्य यथा हरिमन्दिरताऽङ्गीक्रियते तथैवास्यापि 'तच्छिद्रं हरिमन्दिरमि' त्यनेन सा भूयस्त्वाद्वादत्वेन मञ्जूरीकार्य्या, विशेषानभिधानात्। अत एव 'साधूनां समयश्चापि प्रमाणं वेदवद्भवे'दिति येषां यथैव शिष्टाचारस्तैस्तथैवाचर्य्यमाणे तस्मिँस्तच्चेति सर्व्वं प्रामाणिकमिति सिद्धान्तः।

दण्डाकारे द्विरेखे श्रीगोकुलेशानुयायिनाम्।
मन्दिराकारताप्रख्या मान्यताऽस्तिपुरातनी ॥१५॥

इति दिक्।

सम्प्रदायेऽस्मिन्द्विविधस्यापि तिलकस्य परम्परातः प्रचलितत्वान्नैकस्यादेयत्वं हेयत्वं वा वक्तुं शक्यते। द्वयोरपि दृष्टत्वात्समत्वात्सहैवोक्तत्वात्समबलत्वाच्च। तन्मूलमपि यथा-

महाभागवतः शुद्धः पुण्ड्रं हरिपदाकृतिम्
दण्डाकारं तु वा देवि? धारयेदूर्ध्वपुण्ड्रकम्॥

(प. पु. उ. २५३-५७) भागवताग्रणीर्भगवानत्र ऊर्ध्व-

पुण्ड्रविधानाभिधमध्यायमुपसंहरन्स्वप्रेयसीं भवानीं देवीपदेन सम्बोध्यानेकविधोर्ध्वपुण्ड्रनिष्कर्षभूतं प्रकारद्वयमुपदिश्य धारयेदित्येकविधिना तुल्ययोगितया तत्करणप्रवृत्तये पुरुषविशेषं नियोजयति। भागवताग्रणीत्वेऽपि स्वस्याकरणस्यान्योपदेशस्य चात्राप्रस्तुतत्वा दन्यत्र निरीक्षणीयं तत् । अत्र महाभागवतो भक्तिमार्गीयो भक्तः अत्रसाम्प्रदायिकरीत्या तत्वं न ग्राह्यम् । महाँश्चासौ भागवतश्च । सामानाधिकरण्य आत्त्वम् भगवतोऽयं भागवतः । इदंपदेन दासोऽभिज्ञेयः । 'इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्ति र्भगवत्प्रबोधः । भवन्ति वै भागवतस्ये'ति कथनात्तस्य स्वप्रभोश्चरणस्य चरणयोर्वा स्वशिरसि धारणं सेवकत्वज्ञापनार्थम् । राजपुरुषस्य राजचिह्नवत् । 'महान्तस्ते समचित्ताः प्रशान्ताविमन्यवः सुहृदः साधवो य' इत्येवं विधा महान्तस्ते च भागवताः : तेषामेकतमः। अथवा महद् भागवतं यस्य - भक्तिशास्त्रं हि भागवतम्। तस्यमहत्वञ्च प्रमेयात्मक भगवत्स्वरूपनिरूपकत्वेन वेदार्थसन्देह निवारकत्वात्परमप्रमाणत्वेन च। भगवताप्रोक्तं भागवतम् । तच्चास्मिन्नेव सम्प्रदाये समाधिभाषात्वेन प्रधानंप्रमाणं सद्भगवानिवाद्रियते। बहुव्रीहावपि समानाधिकरण सामर्थ्यादात्वं भवति । एतच्च महाभागवतत्वेन भगवत्कृपयाऽलौकिक ज्ञानशक्ति सम्पतिमत्त्वे भगवच्चरण नलिनयोः शिरसि धारणेन स्वस्य पुष्टिमार्गीय शरणता सूच्यते । शुद्ध स्त्रिभिः शुचिर्हृदयेन शुद्धाद्वैतमतवर्ती वा निष्कामः। नामैकदेश ग्रहणेन नामग्रहणस्य नियमित-

त्वाच्च। वैष्णव इति द्वयोः पदयोः पिण्डितार्थः। पुण्ड्रं चित्रं तिलकमितियावत्। तच्चहरिपदाकृतिमेकचरणाकारं धारयेत्। अत्र विशेषणसामर्थ्यात्पुण्ड्रशब्दः पुंसि। 'पुडिचेत्येके' खण्डने कथयन्ति। पुण्ड्यते तत्पुण्ड्रम्। तिलके पुंनपुंसकयोः प्रयोगो निर्दोषः। रगन्तस्य पुंभूमत्वात्। हरिपदाकृतिम् हरेः पदं तस्याकृतिरिवाकृतिर्यस्येति तम्। तथैवरूढत्वात्। सर्व्व-दुःखहर्ता हरिस्तस्यपदं दुःखेभ्यस्त्राणभूतं जीवस्य चांशस्य स्थानभूतं 'पदं व्यवसितित्राणस्थान लक्ष्माङ्घ्रिवस्तुषु' इति कोषवाक्यात्। भगवतो भजनमेव भागवतस्य व्यवसायस्तं ज्ञापयितुं तस्य चोत्तमाङ्गे धारणमावश्यकम्। लक्ष्मत्वमपि 'तिलकं लिङ्गमेव चेतिनिबन्धे 'लिगिगतौ' ये गत्यर्थकास्ते ज्ञानार्थका इत्यनेन लिङ्ग्यते ज्ञायते तत्। लक्ष्म-शब्देऽपिलक्ष्यते तत्। उभयोरेकएवार्थश्चिह्नमिति। तच्च यज्ञोपवीतं द्विजस्येव वैष्णवत्वबोधकम्। 'स्या-च्छ्रोतवाङ्घ्रिरशुभाशयधूमकेतु'रिति शिरसिधृते भगवत-श्चरणेऽशुभवासनाप्रमथनप्रार्थनाऽभिव्यज्यते। प्रभोश्चरण-स्याश्रय एव परमार्थभूतवस्तुतया तदीयैरधिगण्यते। स एव प्रपन्नानां प्राप्तिविषयकत्त्वात्परमगतिभूतं वस्तु। तच्च भाव-पोषकतयोत्तमाङ्गे विधेयम्। न च तत्तदेव धर्तुं शक्यतेऽत 'आकृतिर्जातिरूपयो'रिति तद्रूपं ललाटे लेखनीयम्। अत्र त एव प्रमाणं ये जनशिक्षाकृते तथाकृतवन्तो 'यद्यदाचरति श्रेष्ठ' इति भगवद्वाक्यात्। स्वयंधरेदन्यंधारयेच्च। स्वार्थेणिज्वा।

हरिपदाकृतिशब्देन चरणाकारत्वं बोध्यम्। तच्च सर्व्वत्र चरणस्याकारेरूढम्। तथैव शिष्टाचारात्। ततः पक्षान्तरप्रतिपाद्यं दण्डाकारमूर्ध्वपुण्ड्रकं तुशब्देन चरणाकाराद्व्यावर्त्यते। अत्र द्वौपक्षौस्थाप्येते चरणाकारस्य दण्डाकारस्य च। तयोर्मिथः साम्यं प्रकरणवशादूर्ध्वपुण्ड्रत्वेन। पृथक्तया निरूपणं चाकारविशेषंख्यापयति। आकृत्याऽऽकारशब्दाबूर्ध्वपुण्ड्रस्य विशेषणतया प्रयुक्तौ तुवेत्यव्ययद्वयेन तस्य च भेदसाम्ये ज्ञापयतः। दण्डाकारं दण्डयोराकार इवाकारो यस्येति तम्। दण्डशब्दश्चरणस्याभिव्यञ्जकः। शब्दविशेषात्। शब्देनैव विशेषस्योक्तत्वाद्विच्छित्तिविशेषरूपविषयनिगरणेन निश्चितविषयिक्रियासाम्यात्। चरणाकारे चरणस्याकारो दण्डाकारे तु दण्डयोः। वेतिसाम्यं तच्च यथैकस्य तथैव द्वयोः। एतेनोपरि किञ्चिद्विस्तीर्णत्व' इत्यादिवाक्यमुभयोरीषद्भेदमुपेयुषोः संगत्यर्थम्। दुर्लभाङ्घ्रिसरोरुहैः श्रीमद्वल्लभाचार्य्यैरभिहितस्य दण्डाकारस्य तदात्मजैः श्रीविट्ठलनाथचरणैः श्रीकृष्णप्रेमामृते समानरेखाद्वयात्मकमिति विवरितत्त्वाद्द्विरेखं तद्दण्डाकारम्। समानत्वे 'समानपादमितिमानम्। आकारभेदादेव भावभेदो भवितुं प्रभवति। स्त्रियां वर्तमान आकृतिशब्दोऽवयवसंस्थाने विद्यते। स च स्त्रीरिव चञ्चलोऽपि च कोमलोऽन्याश्रयमभिव्यञ्जयन्न-स्वसेव्ये भक्तस्य दृढरुचित्वमुद्योतयतेऽतएवाभिप्रायानुरूपचेष्टायां विद्यमान आकारशब्दः पुंसि पुंसामनन्यत्वंप्रथयन्हरिपदाकृते र्विभिन्नो दण्डाकार ईशे ईशितव्यस्य चेतसः स्थैर्य्यं-

प्रतिज्ञापालने दृढत्त्वं स्वोक्तनिर्व्वाहेऽकृपणत्वञ्चपरिचाययति हरिपदाकृति शब्दस्यापि व्याकृत्या दण्डाकारत्वापादनं सुशकं तथापि संदिग्धत्वात्पृथग्ग्रहणम् । एतदेवाभिसंधाय 'दण्डाकारमिति चरणाकारस्योपलक्षण' मित्याकरेषु । तच्च चरणाकारवद्दण्डाकारं किन्तु तद्द्विचरणात्मकमिति प्रतीतिलाभार्थं मत्येतव्यम् । उपलक्षणस्य च स्वप्रतिपादकत्वे सति स्वेतर प्रतिपादकत्वात् । अस्मिन्श्लोके हरिपदाकृतिदण्डाकारयोर्विस्पष्टतया प्रतिपादनात्तुशब्देन भिन्नतया तस्य तस्य च सद्भावाद्वाशब्देन 'मणीवोष्ट्रस्ये 'ति वत्साम्याच्चशेषिण ऊर्ध्वपुण्ड्रस्यधारणे समबलतया पर्य्यवसानं विज्ञेयम् । तच्चाप्तोपदेशवशंवदैर्यथोपदेशं ग्राह्यम् । समेऽपि विधिवोधितत्वेऽनयोः परबलीयस्त्वेनाभिप्रायानुरूप चेष्टा संसूचकत्वेन च दण्डाकारधारणमेव वरमित्यभिमन्यमानाः श्रीकृष्ण हार्दविदो 'दण्डाकारं ललाटे स्यादित्युपदिदिशुः । अतएव 'यत्परः शब्दः स शब्दार्थ' इति न्यायाद्यद्बोधेच्छयोच्चारितः शब्दः स स्वप्रतिपाद्यं तात्पर्य्यं विवृणोतीत्यभिरूपाः । न चान्यस्य करणेनान्यस्य प्रतीतिः । प्रचारस्तूभयोरपि पूर्व्व पर वलीयस्त्वेन परम्परयाऽचर्य्यमाणत्वात्प्रामाणिक इति न सन्देहगन्धोऽप्यत्र । एन मेव श्लोकं पुरस्कृत्योर्ध्वपुण्ड्रस्य तत्र तत्र द्वैविध्यं दृष्टचरम् । तथापि 'भक्तिमार्गे सर्व्वमार्गवैलक्षण्यानुभूतिकृतां' सत्यपि दण्डाकार करणकोपदेशे चरणाकारकरणकारणं निर्मत्सरैः समदर्शिभिः साम्प्रदायिकसंख्यावद्भिरन्वेषणीयम् । वयं तु मन्महेऽतिदेश-

न्यायेन ते तादृशमेव दण्डाकारं तथैव परम्परया मन्यन्ते। 'नैतदेव यथात्थ त्वं यदहं वच्मि तत्तथा। एवं विवदतां हेतुं शक्तयो मे दुरत्यया' इति भगवद्वचसा वा तासां प्राबल्यादेतदपि सर्वं सुघटम्।

एकस्य धारणेन स्याद्धरेरङ्घ्रेः पदाकृतिः।
दण्डाकारं द्वयोरत्र प्रमाणं हि परम्परा ॥१६॥

अथवा समेषां वैष्णवसम्प्रदायानामाचार्य्यत्वाद्वैष्णवाचार्यो भगवानिन्दुमौलिर्धारयेदित्येकक्रियया मर्य्यादामार्गीयं पुष्टिमार्गीयश्च वैष्णवं विशेषणद्वयेन कर्तुःकर्मणश्च तुल्ययोगितया यथाक्रममनुशास्ति। कर्ताऽत्रवैष्णवः। कर्मोर्ध्वपुण्ड्रम्। तयोः पुनर्द्विविधत्वाद्विधा वाक्यबोधः। स च यथा–महाभागवतो मर्य्यादामार्गीयः शास्त्रमर्य्यादामनुरुध्य वर्णाश्रमधर्मपालकः सन्सकामां भक्तिं कुर्वाणो मुमुक्षुर्भक्तोहरिपदाकृतिं चरणाकारमूर्ध्वपुण्ड्रं धारयेत्।

'यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोक' इत्यादिषु भीतस्य, निर्भयपदवरणवदथच 'कामदुघांङ्घ्रिपद्मम्' अत्र सकामस्येव कामपूरणप्रार्थनादिवत्तथा च 'शंनस्तनोतुचरणः पुरुषोत्तमस्येत्यत्र सुखाभाववतः सुखवितननार्थनेव सकामत्वं ज्ञायते तस्य। भगवतश्चरणस्यकामपूरकत्वं भक्तिशास्त्रे प्रसिद्धम्। अतएव वन्दनमपि तथाविधस्य 'वन्दे महापुरुष ते चरणारविन्द' मित्येकचरणस्य। ततस्तेन स एवशिरसि धार्य्यः। गणितानन्द

त्वात् । 'चैद्ये च सात्वतपतेश्चरणं प्रविष्टे' इति तस्याक्षर ब्रह्म-
त्वात् चरणाश्रयणेन शरणमार्गः प्रतीयते । स चापिद्विविधः ।
'मर्य्यादामार्गीयोऽपि शरणमार्गो भक्तिमार्गीयशरणमार्गाद्भि-
न्नोऽस्ति, मर्य्यादामार्गीयफलसाधक' इति श्रीगोकुलनाथाः ।
भक्तिमार्गीयोऽत्र पुष्टिमार्गीयः । साधनभक्तेरेवमर्य्यादामार्गी-
यतया निर्गुणायाः स्वामिप्रेतत्वात्तथैवोक्तिः । अथ च शुद्धः
लोकवेद निरपेक्षः सन्केवलं श्रीकृष्णस्वरूपपरतया स्थितः शुद्धा-
द्वैतैकसन्निष्ठः पुष्टिमार्गीयो भक्तो दण्डाकारमूर्ध्वपुण्ड्रं धारयेत्।
'महताऽपिबाधकेनाचलनं निष्ठेतिजगद्गुरवः । एतस्य च
नक्रामकर्मबीजानां. यस्य चेतसि सम्भवः । वासुदेवैकनिलयः
स वैभागवतोत्तम' इत्युक्तरीत्योत्तमत्वम् । अथ, च 'सालोक्य
सार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना
मत्सेवनं जनाः' । स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत' इत्यनेन निष्कामत्वं
निर्गुणत्वञ्च प्रतीयते । पश्यामि नान्यच्छरणं तवाङ्घ्रिद्वन्द्वा-
तपत्रादमृताभिवर्षात्' । ध्यानेन यामपदयोः पदवीं सखे ते ।
अविस्मृतिः कृष्णपदारविन्दयोः । भवे भवे यथाभक्तिः
पादयोस्तव जायते संत्यज्य सर्वविषयाँस्तव पाद मूल-
मत्रपादयोर्मूलमिति श्रीवल्लभाः । इत्यादिषु त्वनन्यशरणतया
तयोर्दृढाश्रयत्वस्योक्तत्वात्तावेव धार्य्यावित्यगम्यते । किञ्च-
दण्डाकार शब्देनतदाकारस्य संदिग्धत्वेऽन्यत्रादर्शनाच्च श्रुतौ
द्विरेखमूर्ध्वपुण्ड्रं भवतीतिप्रतीतेर्यथकचरणवच्चरणाकारं तथैव
द्विरेखं द्विचरणाकारंदण्डाकारमतस्तदेव तदितिमत्वा तादृशो-

लोकप्रसिद्धेरनेनैतत्स्वशिरसि धार्य्यमिति सिद्धान्तः। 'शिरोमत्पादयोः कृत्वेऽतिचास्यतावेवोपगूहनत्वेनस्थितौ तत्रैव स्वधारिणः मनसः स्थितिं "मनस्तवपादयोर्नः' मनः कृष्णपदारविन्दयो'रितिज्ञापयत इतिस्मर्य्यते च। स्वरूपानन्दानुभवफलपर्य्यवसायित्वादिति श्रीगोकुलनाथाः । एवं द्विविधस्य शरणमार्गस्याकारभेदेनोर्ध्वपुण्ड्रस्य द्विविधत्वमेकेन श्लोकेन प्रतिपादितं ज्ञेयम् । किञ्च 'ऊर्ध्वपुण्ड्रं द्विजः कुर्य्यादित्यत्र प्राप्तवैष्णवदीक्षान्यतरेषां द्विजानां शिष्टकृतविनियोगदर्शनवत्तदाचरणात्तेषु तेषुकर्मारम्भेष्वपि ' ऊर्ध्वपुण्ड्रं विना कुर्य्यात्तत्सर्व्वं निष्फलं भवेदि'ति कर्मनैष्फल्यबोधनाच्च तत्कीदृशमित्याशङ्कायां वासुदेवोपनिषत्प्रतिपाद्यमूर्ध्वपुण्ड्रं स्वस्वरूपं शिष्टाचाराचरणाकारवद्विख्यापयति । अत एतत्सर्व्वसाधारणम्। नैतस्य पुष्टिमार्गीयतिलकत्वे विशेषप्रामाण्याभ्युपगमो 'दण्डाकारं ललाटेस्यादि' त्युपदिष्टत्वाच्च । तत ऐहिकपारलौकिकनैश्चिन्त्यद्योतनार्थमुभयत्राप्यूर्ध्वगतिः प्रभोरनुग्रहाधीनेतिज्ञापयितुमस्मिन्मार्गे द्विरेखं दण्डाकारमूर्ध्वपुण्ड्रमितिसारभूतोऽर्थः ।

भवेदेकपदाकारं मर्यादायां मनोहरम् ।
तथैव द्विपदाकारं स्यात्पुष्टावूर्ध्वपुण्ड्रकम् ॥१७॥

अथवोर्ध्वपुण्ड्रस्येतः पूर्व्वकथितान्सर्वानाकारभेदान्निरूप्य 'गृह्णन्तिपादयुगलं कमलोपहारा' इत्यनेन रसप्रवाहवाहिनाभि-

वीहिनीभिरपि सत्कृतत्वात्परमरसात्मकस्य भगवतश्चरणयुगलस्य 'तं नः समादिशोपायं येन ते चरणाब्जयोः। स्मृतिर्यथा न विरमेदपि संसरतामिहे'त्यनवरतस्मृतिसंसिद्धयेऽगाधबोधैर्विधिप्रधानविबुधैरपि ध्यायमानत्वात्तत्प्राप्तावेवानन्यगतिकानां चरमफलतया तदितरकामनारहितत्वात्तत्सेवन एव निखिलपुरुषार्थपरिसमाप्तिमभिमन्यमानानां शिरसि तस्यैव धारणमुदाहरन् 'यो नाद्रियेत त्वत्पादौ सशोच्यो ह्यात्मवञ्चक' इति स्वस्याद रातिशयं समर्थयन्महाकारुणिको हरो गिरितनयामूर्ध्वपुण्ड्रं सारभूतं द्विरेखदण्डाकारं समभिव्याहरति । 'हे देवि ? शुद्धो महाभागवतस्तु पुण्ड्रं धारयेच्चेद्धरिपदाकृतिं दण्डाकारं वोर्ध्वपुण्ड्रकं धारयेदिति' । यद्यपीतः प्राङ्निर्दिष्टानि 'अश्वत्थपत्रसंकाशो वेणुपत्रनिभस्तथा। पद्मकुड्मल संकाशो मोक्षदं त्रितयं स्मृत' मित्यूर्ध्वपुण्ड्रान्तर्गतान्याकारान्तराणि सन्ति चेत्सन्तु नाम। किन्तु तेषां सकामत्वेन निः साधननिष्कामादि कर्तृभिन्नविषयत्वात्तादृशः पूर्वोक्तविशेषणविशिष्टः शुद्धः शुद्धाद्वैतमतवर्ती महाभागवतोभक्तिशास्त्रीयाचारपरायणः 'स्मरन्तः स्मारयन्तश्च मिथोघौघहरं हरिम् । भक्त्या सञ्जातया भक्त्या बिभ्रत्युत्पुलकां तनु' मित्यादिलक्षणलक्षितोऽनुरक्तश्च 'यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहे'ति शरीरवाङ्मनोभिर्भगवत्सेवैकप्रवणो वैष्णवस्तु पुण्ड्रं तिलकं धारयेच्चेत् । तादृशस्य तिलकस्यावश्यकर्तव्यतायामियं संभावना परिसंख्याविधिमवगमयति । हरिपदाकृतिं हरेः पदे तयोराकृति

रिवाकृति रवयव संस्थानंयस्येति तम् । 'नमः श्रीकृष्णपादाब्ज-तलकुंकुमपङ्कयोः। रुचे यदरुणं शश्वन्ममकंहृदयाम्बुज मिति-प्रभुचरणाज्जप्रकारेण ललाटे कुंकुमरचिता भगवच्चरणयुगला-कृतिः स्वमावाद्रुचिर हृदयकमलमनुरागदानेनातिशयं रोचये-दितिमतिपत्तिविशिष्टमित्यर्थः। अन्यथा पादौ विहाय, तयोरुचे नमो न विदधीरन्। 'या प्रीतिरविवेकानां विषयेष्वनपायिनी त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु' इत्याराध्यविषयकानु-रागघनत्वमेवात्र प्रार्थनीयनवनीतम् । तदितररागविस्मारक-त्वात्पदयुगलमेव मिथः स्मरणमूलमतो ललाटे लेखनीयम्। अपि च मधुराष्टके नयनस्य च पाणेर्विद्यमानेऽपि द्वित्वे तदपहाय 'पादौमधुरा'वित्येवादिष्टम् । अत्र श्रीमद्गोकुल-नाथाः 'स्वशिरसा माधुर्यविशिष्टपादतलस्पर्शनं कुर्व्व-न्तीत्यादि व्याचख्युः। अतो ज्ञायते सम्प्रदायेऽस्मिन्भग-वत्पादयोरेव विशेषो महिमा। सर्व्वात्मना तयोरेव दास्यत्वेन सेवनस्यावश्यकत्वात्। तच्च तादृगेव ललाटे लेखितुं दुःशकमतो विविच्य निर्दिशति दण्डाकारमिति। दण्डयोर्द्वयोरेखयोरेते-न नातिकृशं नातिस्थूलमपि च ऋजुयथास्यात्तथेति ज्ञापितमा-कारोऽभिप्रायानुरूपचेष्टाविशेष ऐहिकपारलौकिकनैश्चिन्त्य-द्योतकः, 'चिन्ता कापि न कार्य्या निवेदितात्मभिः कदापीति। भगवानपि पुष्टिस्थो न करिष्यति लौकिकीञ्चगति'मित्यनेन कृतो प्रीतिरस्याभिर्मस्तके मुरारेः श्रीचरणौधृतावतः स एव निजेच्छातः सर्व्वमपि शुभद्रं करिष्यतीति तदन्योपेक्षापूर्व्वक-

तदेकापेक्षत्वं व्यज्यते स इवाकारो रूपं यस्येतितम् । वा 'वा स्याद्विकल्पोपमयोरेवार्थे' इति विश्वः । एव निश्चयमित्यनेनान्ययोगव्यवच्छेदो बुध्यते । ऊर्ध्वपुण्ड्रकं प्रसिद्धं धारयेदित्यर्थः । एकार्थत्वेऽपिलिङ्गप्रत्ययजन्य वैलक्षण्येनार्थभेदान्नपौनरुक्त्यमाकृत्याकारशब्दोपात्तत्वनिमित्तम् । मोक्षदं त्रितयं स्मृत मित्याधुनिकपाश्चीयो पाठः । मोहदं त्रितयं स्मृतमितिमार्तण्डोल्लेखाल्लेखिते कदाचित्तादृशः स्यादुभयोः सकामत्वं स्पष्टमेव । लोकेऽपि सर्व्वात्मना शरणागतेन शरण्यस्य द्वयोः पदयोः स्वशिरो निधीयते, तदितरसहाय्याभावप्रकाशनाय स्वस्य च निःसहाय्यत्वं प्रकाश्यते । अतो भक्तिमार्गाब्जमार्तण्डैर्दण्डाकारस्य निरुक्तत्वात्तस्य च द्विचरणाकारपर्य्यवसन्नत्वादेतदेव द्विरेखं दण्डाकारं भक्तिमार्गीयाणां तिलकमिति सिद्धम् । आकृतिशब्देनास्य सौन्दर्यमाकारशब्देन च स्वमार्गीयसिद्धान्तनिर्भरत्वं ज्ञेयम् । भगवत्यनुरागप्रार्थनाया 'न मय्यावेशितधियां कामः कामाय कल्पत इत्युक्तदिशा सकामत्वपरिहारो बोद्धव्यः ।

अवबुद्ध्यार्थगाम्भीर्यमेवं कृष्णास्यकिंकरैः
दण्डाकारं द्विरेखं स्वललाटे लेख्यमादरात् ॥१८॥

अस्मिन्हि ऊर्ध्वपुण्ड्रप्रकरणे 'उभयाकांक्षा हि प्रकरणमि' ति प्रकरणलक्षणात्-शेषशेषिणोः परस्पराकांक्षा भवति । तत्र शेषस्यपरार्थतयैव प्रयोगः । 'यदर्थत्वेन यस्य विधानंसतस्यशेष'

इत्यनेन तेषां तेषामाकाराणा मूर्ध्वपुण्ड्रार्थविधानवत्त्वेन शेषत्वम्। अर्थोऽत्र शेषी। अतो येषां मते दण्डाकार श्चरणाकारोऽन्यश्च कश्चन वा तद्विधः प्रमाणलभ्यस्तस्य परमार्थस्तूर्ध्वपुण्ड्र एव। शेषिण इमे शेषा भेदका न भवन्ति। अङ्गत्वात्। अत एव श्रीहरिरायचरणाः सत्यपि 'दण्डाकारं ललाटे स्या' दिति प्रमाणमूर्धन्ये श्रीगोकुलनाथानामष्टोत्तरशतनामनिरूपणे 'ऊर्ध्वपुण्ड्रधारिणे नम' इत्येव कथयामासुः। अन्येऽपि साम्प्रदायिका आचार्य्यमहाभागास्तिलकधारणप्रतिपादिकायाः स्वकृतेरूर्ध्वपुण्ड्र एव पर्य्यवसानादेतन्नाम्नैव निजनिबन्धनामधेयं निरूपयामासुः। अथ च 'प्राधान्येन व्यपदेशा भवन्ती' तिन्यायमवलम्ब्यादावूर्ध्वपुण्ड्रत्वेनोपक्रम्यान्यमतेभ्यः स्वमतस्य वैलक्षण्यमुपपाद्य तस्यैव निर्दोषत्वं सम्यक्तया संस्थाप्य कानिचिदन्यमतानि शास्त्रयुक्त्या सन्दूष्योपक्रमोपसंहारयोरेकवाक्यतामापादयामासुः। यदि तत्र शेषशेषिभावलक्षणकः सम्बन्धो नाङ्गीक्रियेत तदा वाक्यभेदो दुष्परिहरो भवेद्येन कृतेरपि चानर्थक्यं स्यात्। पद्मपुराणेऽपि 'ऊर्ध्वपुण्ड्रस्य माहात्म्यं वक्ष्यामि शुभदर्शने। धारणादेव मुच्येत भवबन्धाद्द्विजोत्तम इत्यनेनारभ्य 'सुदर्शनेनाङ्कित बाहुमूलास्तथोर्ध्वपुण्ड्राङ्कितसर्व्वगात्राः। मालारविन्दाक्षधरा विशुद्धा रक्षन्ति लोकान्दुरितौघसंघादि'त्युपसंहृत्य ताँस्तान्विशेषान्निरूप्य दूषणानि परिहृत्याध्यायस्याभिधानमप्यूर्ध्वपुण्ड्रविधानमिति कृतं निरीक्ष्यते। तत्रैव च दण्डाकारं तु वा देविधारयेदूर्ध्वपुण्ड्रकमि-

विशेषशेषिवाचकयोः पदयोर्विद्यते सहोच्चारणम् । एवमिव चरणाकारस्यापि शेषत्वे न क्षतिः । एवञ्च प्रमाणान्तरप्राप्तानामन्येषामपीति । अनेक शेषत्वेऽपि शेषिणो न क्षतिरित्यन्यत्र विस्तरः । 'दण्डाकारमूर्ध्वपुण्ड्रकं धारयेदि'त्यस्य दण्डाकारतया विहितकृतिद्वारोर्ध्वपुण्ड्र धारणं भावयेदिति प्रकरणलभ्यो वाक्यार्थः । भवबन्धान्मुक्तिरत्रफलम् । तच्च सम्प्रदायानुरोधेन यथातथं मन्तव्यम् ।

ननु दण्डाकारचरणाकारयो रवान्तरत्वाद्भिन्न प्रकरणत्वेऽपि 'विधेः प्रकरणान्तरेणातिदेशात्सर्व्वकर्म्मस्यादि'तिन्यायेनोर्ध्वपुण्ड्रत्वाच्चरणाकारंस्यादेवेति चेन्न । लिङ्गबलेन नु दण्डाकारमित्यस्य 'सामर्थ्यं सर्व्वशब्दानां लिङ्गमित्यधीयत' इत्यनेन दण्डवदाकारतया साधर्म्याच्चरणाकारमुपतिष्ठते । सामर्थ्यमत्ररूढिः । सा कदाचित्सादृश्याद्दण्डाकारं चरणाकारतया स्थापयेत् । अधिकं तु प्रविष्टे न तद्धानेरिति वा । तथाऽपि यथा 'तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस नः' इत्यनेन श्रीकृष्णस्यापि सर्व्वसाधारणेंऽशत्वे "कृष्णस्तु भगवान्स्वयमि' ति पूर्ववचसा श्रुत्येव पूर्णत्वमंशित्वञ्च तद्वदत्रापि 'आत्मान्तरगुणानामात्मान्तरेऽकारणत्वाद्' दण्डाकारशब्देनोपस्थित चरणाकारव्यावर्तनाय श्रुतिर्भगवती दण्डाकारस्यान्यदेव व्यपेक्षितत्वमुपदिशति सा च यथा—

'सुदर्शनं धारयत्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणः

सायुज्यतां सलोकतां जयति य एवं वेद '

इदमेव दण्डाकारं द्विरेखमिति पर्य्यायान्तर प्रसिद्धम् । प्रभुचरणैरपि 'समानरेखाद्वयात्मक मिति यदुदीरितं तस्याप्येषाश्रुतिरेवमूलम् । श्रीपुरुषोत्तम चरणैरियमेव 'एतदारम्भश्च नासामूलाद्भ्रूमध्याच्च कार्य्य इति विशदीकृता सती 'आरभ्यनासिकामूलं ललाटं विलिखेन्मृदा । समारभ्य भ्रुवोर्मूलमन्तरालं प्रकल्पयेदि'ति पद्मपुराणवचसा (उ. २५३–४३) समसुपोद्बलकेन स्ववादग्रन्थे समुदाहृता लोचनगोचरीभवति भ्रुवोमध्यमिति पद्मपुराणीयः पाठः । श्रीगिरिधरजीचरणैर्यद्यपीयं स्वकीय ऊर्ध्वपुण्ड्रमार्तण्डग्रन्थे न निहिता तथाऽपि तैः 'प्रकल्पयेदिति विधिबलादेव द्विरेखत्वं समुच्चयेन साधितं सत्तत्रैव सुमनसां सन्देहनिवृत्तये समास्ते । श्रीभारतमार्तण्डा अप्येनां 'तस्मा च्छिद्रान्वितं पुण्ड्रं महाछिद्रं शुभान्वितम् । धारयेद्ब्राह्मणो नित्यं हरिसालोक्य सिद्धय' इति पाद्मे (उ–२५३–२८) नानुवदन्ति । विशेषजिज्ञासुभिस्तत्तस्ततोऽवगत्य निर्विचिकित्सै र्भवितव्यम् । एवञ्चसर्व्वसम्मताया अस्या द्विरेखत्वप्रतिपादने नैव दण्डाकारस्य प्रतिपादनं समर्थ्य व्याख्यायते सुदर्शनमिति—शोभनं दर्शनमस्येति । तत्र 'दर्शनं वर्णमुकुर चक्षुः शास्त्रोपलब्धिषु' इति कोष वाक्यात्सुन्दरो वर्णो यस्येति 'ऊर्ध्वपुण्ड्र मृजुं शोणं दण्डाकारं सुशोभनम् । कौंकुमं यस्य भाले तु स वै भागवतोत्तम इति पुराणवाक्येन प्रमाणितं स्वसेव्यविष-

यक परमानुरागं सूचयत्सुशोभनमरुणवर्णं प्रतीयते।

कामयामह एतस्य श्रीमत्पादरजः श्रियः
कुच कुंकुमगन्धाढ्यं मूर्ध्नावोढुं गदाभृतः।
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः
गावश्चारयतो गोपाः पादस्पर्शं महात्मन इत्यनेन

ईक्षणमप्यस्याह्लादजनकं विद्यते। सायुज्यसालोक्यजयात्मक भक्तिमार्गीयफलानुशासकतया शास्त्रवत्स्वीकार्य्यता प्रतिपाद्यते। 'मुच्लृ मोचने' 'मकि मण्डने' वेत्युभाभ्यां मुकुरशब्दस्य निष्पत्तिः। मुञ्चतिश्रियमथमङ्कते—मण्डयति भालम्। तदपि सुन्दरं यथास्यात्। दर्पणवद्धर्षप्रकर्षदं ललाटे ज्योतिर्मोचकञ्च। सुतरामुपलब्धिमत्वात्—'ना भाव उपलब्धेः' 'नाभावो विद्यतेसतः' सदेवसौम्येदमग्र आसीदिति प्रमाणशत प्रतिपादितं स्वसिद्धान्तशेखरितञ्चसत्कार्य्यत्वादं द्योतयदेवंविधं सुदर्शनम्। ऊर्ध्वपुण्ड्रम्—पुण्ड्रशब्दोऽव्याख्यातः। ऊर्ध्वमुपरि च तत्। धारयति धारणं करोति दधातीत्यर्थः। सुदर्शनतयैव केन भावयेदित्याकांक्षा विरमति नवकुंकुमारुणगुणवत्त्वात्। 'कृष्णभुक्तेननिर्मितम्। गन्धेन' इति भगवत्प्रसादिकुंकुमनिर्मितत्त्वाच्च। ऊर्ध्वपुण्ड्रस्यानेक भेदवत्त्वात्तत्पुनः कीदृशमिति योग्यता विमर्शार्थं तत्स्वरूपनिणयायोपदिशति। 'द्विरेखं भवति'। इयमेवसमाख्या। द्वेरेखे यस्येति। 'रेखाश्लाघाऽसादनयोरिति' कण्ड्वादिः। लेखस्यसमानार्थको रिखोऽपिभ्वादिरितिकेचित्। रिख्यते रेख्यते लिख्यते वा सा रेखा। रलयोरेकत्त्वस्मरणा-

ल्लेखैव रेखेति श्रीभानुजीदीक्षिताः । ललाटं विलिखेन्मृदेति पुराणवाक्याच्चित्रये दित्यर्थः। रेखति चित्रकृदिति कवि प्रयोगाद्रेखां करोति चित्रयतीत्यर्थाच । सामानाधिकरण्यात्ते अपि समाने स्याताम् । समानरेखाद्वयात्मकमिति श्रीप्रभुचरणाः । सहमानेन वर्तेते समानं मानमनयोरिति वा । समानि व आकूतिः समानाहृदयानि वः । समानमस्तु वो मन इतिमन्त्रवर्णात्समत्वमेव श्रेयसे भवति । 'सर्वभूतसुहृत्समः । साधुः समत्त्वेन भयाद्विमुच्यते । ' इति भक्तिशास्त्रेऽपि तत्र तत्र समत्वं प्रशंसितमुपलभ्यते । ते रेखे अपि स्वसेव्यस्य चरणयोश्चिह्नरूपे वर्तेते । नहि आनन्दमात्रकरपादमुखोदरादेः श्रीचरणौ विषमौ भवतः । 'ये यथा मां प्रपद्यन्ते ताँस्तथैव भजाम्यहमित्यत्रापि सममेव प्रपत्त्यनुकुलत्वञ्च । ऊर्ध्वपुण्ड्रस्य प्रधानतया प्रतिपादनेन तद्विशेषणत्वेन स्थिते रेखे ऊर्ध्वे भवतः । भगवतश्चरणावप्यूर्ध्वरेखाङ्कितावाश्रितस्योत्कृष्टां गतिं प्रापयतः । तद्भवति– सत्तां लभतेऽतो ब्रह्म सम्बन्धवद्भिस्तदेव करणीयम् । पुराणेषु दण्डाकारतयैतदेव प्रथितम् । लोकेऽपि चास्यैव तत्त्वेन प्रसिद्धिः । यच्च दृष्टमात्रं स्वसंस्थां प्रख्यापयेत्तदेव तत् । यच्च वृद्धाः प्रचक्षते । अत्र वर्णेष्वेव व्यक्तिभेद उपलक्ष्यते । व्यक्तिभेदेनाकारभेदोऽप्यभ्युपेयः । विशेषस्तु निरूपितः । ब्रह्मणः पुरुषोत्तमस्य स्वसेव्यस्येति तात्पर्यार्थः । सायुज्यतां तेन सहयोगस्तत्ताम् । श्रीकृष्णसम्बन्धे ये प्रतिबन्धास्तेषां निवारणपूर्वकं भगवल्लीलानुभवयोग्यतावत्त्वमिति वा । सलोकतां

समानेलोके स्थितिमत्त्वम्। जयति–उभयोरधीनीकरणरूप-मुत्कर्षं लभते। अर्थात्तद्द्वयं दीयमानमपि स्वस्य भगवत्सेवाऽभिरुचिकत्वान्नगृह्णाति। यो धारयतेः कर्ता यत्तदोर्नित्यसम्बन्धादेवं यो वेद सधारयतीत्यर्थापत्तिलभ्यः। एवं द्विरेखधारणं द्वयोरुत्कर्षायेति प्रकारेण। वेद जानाति स धरतीति स्पष्टोऽर्थ। अस्या एवोपबृंहक 'आरभ्य नासिकामूल' मिति पद्मपुराणस्य श्लोकः। आथर्वणेऽपि–'हरेः पादाकृतिमात्मनो हिताय मध्ये छिद्रमूर्ध्वपुण्ड्रं योधारयति स परस्य प्रियो भवति स पुण्यवान्भवति स मुक्तिवान्भवती' तिस्पष्टोऽर्थः। मध्ये छिद्रवत्त्वात्पादयोराकृति रिवाकृतिर्यस्येति प्रव्यक्तो द्विरेख दण्डाकारप्रकारः। एवञ्च भक्तिमार्गस्य बहुविधत्वादूर्ध्वपुण्ड्रस्यापि वैविध्यसिद्धौ भक्तिमार्गस्य कथनाद्भक्तिभेदेषु पुष्टेर्गणनायां पुष्टिमार्गीयोर्ध्वपुण्ड्रविषये 'दण्डाकारं ललाटे स्यादित्याप्तोपदेशत्वाच्चरणाकारस्य चोपलक्षणत्वादेतदेव द्विरेखापरपर्य्यायं दण्डाकारमूर्ध्वपुण्ड्रं भगवच्चरणयोराकारतां धारयत्तत्रैव प्रह्लादसन्निभभगवद्भक्तप्रार्थ्यमानपदयुगालयहंसानां भक्तिमार्गीयाणां दृढाश्रयत्वं प्रकाशयदन्याश्रयरहितत्वं द्योतयत्स्वसेव्यानां गुरूणाञ्च चरणयोर्निरुपधिभावेनरतिं निदर्शयत्तदन्यत्राकामत्वं निरूपयत्तयोः सेवाया एव परमफलत्वं ज्ञापयत्सेवाशेषत्वेन स्थितिं ख्यापयत्पुष्टिमार्गीयं तिलकरत्नं विराजते वैष्णवभालपट्ट इति सर्व्वमनवद्यम्।

वाणी विजयतां श्रीमद्वल्लभाधीश्वरस्य सा
दण्डाकारं ललाटे स्यादिति गूढार्थबोधिनी ॥१९॥

स्वसेव्यस्यापि लोकवल्लीलाकैवल्याद्यथा देहे तथा देव इति न्यायेन 'श्रीमल्ललाटपाटीरतिलकालकरञ्जित' इति श्रीकृष्णप्रेमामृतस्य व्याख्यायां 'समानरेखाद्वयात्मकं तिलकं विधाये-ति श्रीप्रभुचरणोपदिष्टत्वेन च द्विरेखमेव विधेयम्। भक्तस्तु भगवतश्चरणौ स्वशिरसि बिभर्ति भगवान्पुनः कस्येति न शङ्क्यम्। तस्य तु तत्तन्निष्ठानुराग सूचकत्वात् । प्रभोस्तिलकविधानावसरे सेवकः स्वसेव्यं प्रार्थयते ' हे भक्तवत्सल ! भवच्चरणयोरनुरागो मे भवे भवे भवतु येनोर्ध्वगतिर्भवेदित्यभिधाय भगवल्ललाट एकामूर्ध्वरेखां करोति तदा भगवानप्यहं भक्तपराधीनः स'न्ये यथा मां प्रपद्यन्ते ताँस्तथव भजाम्यहम्'तोऽपरामपि कुर्विंत्याज्ञापयति । भगवतो भक्तेऽनुरागस्याप्युन्नतिकारणत्वात् । अनेन परस्परानुरागसूचकः सेव्यविषयकद्विरेखपुण्ड्र विधानप्रकारोऽनुमेयः

सौभाग्यवतीभिः कन्याभिश्च स्त्रीभिः ' अमन्दसौभगपदं गन्धबिन्दुः स सुन्दरः'। कार्य्यो धार्य्यनोर्ध्वपुण्ड्रमितिप्राचीनपद्धतिः । विशेषमुपजिज्ञासुभिः साम्प्रदायिका आकरग्रन्थाः सूक्ष्मेषिकयाऽवलोकनीया इति दिक् ।

निर्मन्थ्य न्यायमाश्रित्याकरग्रन्थास्थितोऽप्ययम्।
सिद्धान्तोऽधिगतः श्रीमद्गोकुलेशदयादृशा ॥२०॥

मनोऽप्रमाणमालिन्याद्द्विरेखे दोषपङ्क्लिम्
सज्जनाः शोधयन्त्वित्थं ग्रन्थतीर्थेऽत्र निर्मले॥२१॥

श्रौतं कर्म विबोधयन्विधिकृतं आदर्शयन्मर्मसत्
प्रत्नप्रोक्तवचोनिधिं विघटयन्नौचित्यमुद्भासयन्
श्रीमद्वल्लभभाषितं प्रकटयन्भावञ्च संस्मारयन्
दण्डाकारदिवाकरो विधुनुतां ध्वान्तं धियां दोषजम्

कृतिः कथञ्चिदामुक्ता शास्त्रज्ञानां पुरोऽनया
दण्डाकारे द्विरेखे नः सुधियो दद्युरुत्तरम् ॥२३॥

श्रीवीरपुरवास्तव्यश्रीवैकुण्ठाङ्गजन्मना
कृतो बालमुकुन्देन दण्डाकारदिवाकरः ॥२४॥

॥ श्रीगोपीजनवल्लभपदपाथोजनितयुगलाभ्यां नमः ॥

इति श्रीवैकुण्ठजयाम्बालब्धजन्मना मालवीयश्रीगुरु-
द्विजन्मना श्रीप्रसिद्धनारायणन्तेवासिना श्रीवीरपुरवासिना
गुणग्राहिणा श्रीबालमुकुन्दशर्म्मणा विरचितः श्रीदण्डाकार
दिवाकारः सम्पूर्णः ॥ श्रीगोकुलेशः प्रसन्नोऽस्तु ॥